

कलकत्तावडीबजाररानदयालकटरामेश्रीराम
धनभगत औरदमईभगतके छापाखानेमुद्रांकितं
वासतलागलीमेश्रीयवाश्विरसाखवस्थीकेस्थान
मे श्रीराधावल्लभाश्रयपंडित श्रीयदुनाथमिश्र
शास्त्रिसंगृतमिदंपुस्तकं सन१२५३ संवत१ ९२
*माघशुक्लपंचमी*ग्रंथगोचनिर्णयदीपिका*

॥ * ॥ श्रीगणेशायनमः ॥ * ॥

* श्रीराधावल्लभाश्रित शास्त्रीयदुनाथमिश्र *

* पण्डितवर्य्ये ऽहिविजयतुतराम् *

ॐ सत्यमानन्दब्रह्म

अथ ब्राह्मणस्वरूप वर्णनं ॥

ॐ नमः । देवेवर्षतियज्ञविप्लवरुषावज्राश्मवर्षानिलैः सीदत्पालपशु स्त्रियात्म शरणं दृष्टानुकं प्पुतस्मयन् उत्याक्ष्यैक करेण शैलम वलोलीलोच्छिलिध्रं यथा बिभ्रत्गोष्टमपान्महेंद्रमद्भित्भी यान्नइन्द्रोगवां ।१।

अथातः संप्रवक्षामिमाहात्म्यं ब्राह्मणस्यच ॥
श्रुत्वासुकृतिनोलोकेभिरेप्पुत्तमांगतिं ॥२॥

द्वीपं ॥ क्लीं । वारीमध्यतटं ॥ द्वीपोत्पत्तिर्यथा ॥ सूर्य्यः ॥ मेरु प्रदक्षिणी कृत्वन् अर्द्धां पृथ्वीं प्रकाशति अर्द्धां तमसा आवृणोति तदा भगवदुपाशनोपचितातिक्रान्त पुरुषप्रभावः प्रियव्रतो राजा सूर्य्यरथ समवेगेन

ज्योतिर्मयरथेन रजनीमपि दिनं करिष्यामीति प्रतिज्ञां कृत्वा सप्तवारं द्वितीय सूर्य्य इव सूर्य्यमनुपर्य्यक्रामत् । यस्तस्य चरणनेमि परिखाताः सप्तसिन्धव आसन्॥ यैरेवसिन्धुभिः पृथिव्याः सप्तद्वीपाः कृताः ॥ तेषु ॥ जम्बू ॥ १ प्लक्ष २ शाल्मलि ३ कुश ४ क्रौञ्च ५ शाकद्वीप ६ पुष्कर ७ ॥ संज्ञकाः ॥ तेषां पूर्व्वस्यद्विस्तारमानं उत्तरतस्ततो द्विगुणेन विस्तारमानेन परिमानं ॥ तस्मिन्सिन्धुभ्योवहिः समंरचिताः ॥ तथा ॥ सिन्धुभ्यो वहिरेकैकशोद्वीपाः ॥ एवं द्वीपानामपिवहिः ॥ सिन्धवः ॥ सप्रिय व्रतोराजा ॥ वर्हिष्मतीगर्भ जातननुगतानात्मजान् ॥ आग्निध्र १ इध्मजिह्व २ यज्ञवाहु ३ हिरण्यरेत ४ घृतपृष्ठ ५ मेधातिथि ६ वीतीहोत्र ७ संज्ञकान् यथासंख्येन एकैकस्मिन् द्वीपएकैकमधिपतिं विदधे ॥ इति भागवते पंचमे ॥ जम्बूद्वीपे तथाग्निध्रं राजानं कृतवान् पिता ॥ प्लक्षद्वीपेश्वरस्तस्य पितेन मेधातिथिः स्मृतः ॥ शाल्मलेतु वपुष्मंतं ज्योतिष्मंतं कुशाह्वये ॥ क्रौंचद्वीपे द्युतिमंतं हव्यंशाकाह्वये सुतं पुष्कराधिपतिं सैव सवनं कृतवान् सुतं ॥ इति मार्कण्डे पुराणे ॥

मूमेरद्ध भारसिन्धोरुदकस्यं जम्बूद्वीपं प्राक्कुराचा र्ण्यवर्ण्याः ॥ अर्द्धेऽन्यस्मिन्द्वीपषटकस्य याम्ये चार घोराम्बुधीनां निवेशः ॥ द्वयोर्द्वयोरंतरमेकमेकंसमु द्रयोर्द्वीपमुदाहरन्ति ॥ इतिसिद्धान्तशिरोमणि ॥ जम्बूद्वीपोमयाप्रोक्तोलक्षयोजनविस्तृतः ॥ समानेन प्रमाणेनवेष्टितोलवणांभसा ॥ सागरस्यसुतैरश्वाग्वे षणेपरितोमही ॥ खनद्भिःकल्पिताविप्रद्वीपाश्चाष्टौ महार्णवे ॥ स्वर्णप्रस्थश्चन्द्रशुक्लः सिंहलावर्त्तनौतथा ॥ पंचजन्यस्तथामन्दहरिणोरमणकाकयः ॥ लंकेति कथिताविप्रजम्बूद्वीपस्यतेऽन्तराः ॥ इतिपद्मपुराणे ॥ १२० अध्याये ॥ प्लक्षद्वीपंप्रवक्ष्यामिशृणुमांतस्यायन द्विज ॥ यन्मानजम्बूद्वीपस्यतथैवलवणोदधेः ॥ ततो द्विगुणमानोऽसौप्लक्षद्वीपोमहामते ॥ प्लक्षद्वीपस्तथै वासौसंवेष्ट्यलवणोदधिं ॥ जम्बोजम्बूप्रमाणोस्तिद्वी पश्चातिकरस्तरुः ॥ प्लक्षोनाममहाभागस्वर्णवर्णो ॥ शि वामच ॥ प्लक्षवर्षाणिसप्तैव ॥ सुभद्रंयवसं ॥ शिवं ॥ अमृताद्यममारम्ताणिक्षमादभयमित्यपि ॥ प्लक्षानाम महाद्वीपोयपपूज्यस्तुशंकरः ॥ प्लक्षेविप्रादयोवर्णाश्च

त्वारोलोकसंमताः ॥ मगाश्चमगकाश्चैवमानसामन्द गास्तथा ॥ मगाब्राह्मणभूयिष्ठाः स्वधर्मनिरताः द्विज ॥ मगकेषुतुराजन्याधार्म्मिकाःसर्व्वकामदाः ॥ मान सेचमहाभागवैश्यकर्म्मनिषेविणः ॥ मन्दगेषुतथाशूद्रा श्शूराधर्म्मार्थनिश्चिता ॥ *—**—**—*

प्लक्षद्वीपसमानेनसमुद्रेणावृतोवहिः॥ इक्षुरसजलेनैव नानारत्नरताद्विज ॥ *—*—*—*—*

शाल्मलोपितथाद्वीपःप्लक्षाद्विगुणमानतः ॥ चतुर्ल्लक्ष योजनेनसुरोदेनावृतोमहान् ॥ यत्रवैशाल्मलीनाम द्विलक्षयोजनोच्छ्रिता ॥द्वीपख्यातिकरोवृक्षःसुपर्णो नकृतालयः ॥ तत्रवर्षाणिसप्तैवकथ्यन्तेचसुरोत्तम ॥ तत्रविप्रादयोवर्णाःक्रमान्नामानिविभ्रति ॥ आद्यःसु तधरोवर्णस्ततोवीर्य्यधरःस्मृतः ॥ वसुन्धरस्तृतीयस्तु चतुर्थस्त्विषुन्धरः ॥ सर्व्वेतेसोममात्मानंभगवन्तंयज न्तिहि ॥ सुरोदंपरिवेष्ट्याथततोद्विगुणमानतः ॥ * ॥

कुशद्वीपोघृतोदेनसमानेनावृतोद्विज ॥ कुशस्तम्बोमहा नत्रचाद्वीपख्यातिंकरोतिच ॥ आज्वल्यमानोदीप्तैव प्रभाज्वलनराशिवत् ॥ तत्रवर्षाणिसप्तैवसमानानिवि भागतः ॥ तत्रविप्रादयोवर्णानामांतरभृतोद्विज ॥

कुशलः प्रथमो वर्णः कोविदस्तु द्वितीयकः ॥ अतिमुक्त
स्तृतीयस्तु चतुर्थः कुशलः स्मृतः । तेसर्व्वे ज्ञानसंपन्ना
जातवेदस्वरूपिणः ॥ भजंते भगवंतं वैकर्म्मकौशलतया
जिनः ।

घृतोदाच्चतथाद्वीपो द्विगुणः क्रौंचसंज्ञकः । क्षीरोदेन
समानेनवेष्टितो ब्राह्मणर्षभ ॥ क्रौंचनामगिरिर्यत्रद्वीप
ख्यातिकरो महान ॥ क्षीरोदेनाभिषिक्तस्वस्ततं वीचि
संचयैः । वर्षाणि तत्र सप्तैव सप्तैवगिरयस्तथा ॥ विप्रा
दयस्तथावर्णाः ख्यातानामांतरेण तु पुरुषः प्रथमो वर्णः ।
द्वितियो ऋषभः स्मृतः ॥ तृतीयाद्रवितानाम देवसंज्ञ
श्चतुर्थकः ॥ मूर्तिं जलमयीं विष्णोर्ध्यायंति च यजन्ति च ॥

एवं परस्तात्क्षीरोदाच्छाकद्वीपो द्विजर्षभ ॥ आयामे
न स विज्ञेयो द्वात्रिंशल्लक्षयोजनः ॥ दधिमंडोदकेनैव
समानेन ससिंधुना ॥ परितो भाति तत्राशु शाको नाम
महीरुहः द्वीपख्यातिकरः श्रीमानवासयनद्वीपसेवतं
वर्षाणि तत्र सप्तैव पुरायव ॥ मनोयवो धूम्रानीको वेप
मानो विश्वाधारश्च मारिष ॥ बहुरूप स्वरेफो गिरयो
पि च सप्त वै ॥ ईशानः चरच्छृंगश्च वलभद्रः सहानसः ॥

शतकेशवनामाचसहस्रस्रोतएवच । देवपालोपिसप्तैवतेः पर्वसीमाप्रवर्तकाः ॥ नद्यःसप्तैवविख्याताआयुर्द्धोध्यानव्याहृिज ॥ सहस्रुतिःपंचनदी ॥ निवृत्तिरपराद्विजविख्यातोभय सृष्टिस्रु महापुण्यामहाफला विप्रादयस्तथावर्णाःख्यातानामान्तरेणतु ॥ आद्योकृतव्रतोनामततःसत्यव्रतःस्मृतः ॥ दानव्रतानुव्रतौचतृतीयस्चचतुर्थकः ॥ भगवंतंवायुरूपंभजंतेयजंतिच । शाकद्वीपेस्वराःविप्राःवेदवेदान्तपारगाः ॥ वाज्यस्यमानाःसपयासाक्षात्सूर्य्यसमाःद्विज ॥ सर्व्वयज्ञेषुतोयेषुश्राद्धकर्म्मविषेतःपूजनीयाःप्रयत्नेनवक्ताभिःकारगैनैधैः॥ *—*—*—*—*—**

तथैवदधिमण्डोदातपरस्तातपुष्करोमहान् । द्विगुणेनप्रमाणेनद्वीप.क्षारोदकेनतु ॥ परिवीतःसमानेनसिंधुनाक्षाद्यार्णषंभ ॥ यचपुष्करमत्युच्चं ज्वलज्वलनसंनिभं । द्वीपख्यातिकरंयच्चसहस्रायुतशोभितं । यदाकुरासनंविश्वसृजःस्य प्रजापतेः । तचक्षांतरंनाक्तवर्णानांनाम्नार्णभ । स्वादुदकसापरतोलोकालोकाचलोगिरिः ॥ लोकस्थाप्यलोकस्थकमध्येगिरिरवस्थितः । स्वायामविस्तरपृथ्वीपंचाशतकोटिद्विजनाम् ।

तस्याश्वतुर्थभागोयंलोकालोकाचलोगिरिः। तस्यो
परिष्टाश्चत्वारोगजेंद्राःसुमहाबलाः॥ नियुक्ताब्रह्म
णाभिनिकरैराकृष्यसंस्थिताः॥ भगवानपितत्रैवविश्व
क्सेनादिभिर्वृतःपार्षदप्रवरैर्ब्रह्मनभुजैर्वकुंभरुक्तिैः
ततोयोगेश्वरगतिर्योगिनांप्राप्यमुत्तमं।स्थानंभगवतः
साक्षात्प्रेतद्वीपइतीर्य्यते॥ इतितेकथितंब्रह्मनभूगो
लस्यचवर्णनं। यद्दृष्ट्वानुयात्सूतभूगोलस्यानुवर्णनं॥
प्रदक्षिणीकृतातेनसशैलवनकानना॥ससागराचसद्वी
पासवर्षाचवसुंधरा॥ ❀—❀—❀—❀—

॥❀॥ इतिपद्मपुराणे१३१अध्यायः॥❀॥

जम्बूद्वीपेतमेवेचभारतखण्डोतमोतमे॥ शाकद्वीपे
श्वराविप्रास्त्वागताःविष्णुपूजिताः। सूर्य्यरूपालपो
निष्टाःशान्ताःसंतापवर्ज्जिताः।कृष्णेनपूजिताःसर्व्वे
ब्राह्मणाब्रह्मवादिनः॥ द्वारकायांमहाभागाश्रांवरोगा
पनुतये।पूजिताब्राह्मणानित्यंकृष्णेनाद्भुतकर्म्मणा।
तथायोध्यापुरेविप्राःशाकद्वीपनिवासिनः। रामेनपूज
ताःसर्व्वेमुदारामाश्वमेधके। ❀—❀—❀—
यथाहभगवान्व्यासःपुराणेसर्व्वविरस्वयं। शाकंप्रतिम
हागातद्देवैकमनःशृणु। ❀—❀—❀—❀❀

श्रीवेदव्यासउवाच । शृणुध्वं मुनयःसर्व्वे वृतांतंमगध स्यच ॥ कथयामितुमारेननानाद्भुतमयंशुभं ।१। दक्षिणेचविहारस्यपार्श्वे शिवनदीशुभा । सीमामग धदेशस्यख्यातयामुनिभिर्मुदा ॥२। उत्तरेगंडकीसी माहरिहरीयचपावनः ॥दर्शनात्पापबहुलंदूरंगच्छति तत्क्षणात् ॥ ३ ॥ पश्चिमेचारस्यग्रामोभोजदेशसमी पतः॥ सीमामगधदेवाःशोभनाःपश्चिमेमता ।४। सर्व्वपूरंपूर्व्वभागेमध्यंदाद्विजसत्तमाः । गंगायादक्षि णेभागेमानवानांसुखास्पदं ।५। जाम्बवतीसांवमाता पद्मव्रतपरायणा । पद्मपत्राच्छादनंचचातुर्मासेकृत वया ।६। ब्राह्मणांदर्शनार्थायपुराशांवोगमद्द्विजाः ॥ पुत्रस्यदृष्टासौंदर्य्यं जातोमनसिमन्मथः ।७। तेनैव दर्शनेनैवशांवस्यचमहात्मनः ॥ कुष्टरोगस्यदेहेषुजा तोवीरस्यवैसुराः ॥८। दृष्टानारायणस्तत्ररथमा रुह्यसत्वरं । शाकद्वीपंचगतवानरूपुत्रारोग्यहेतवे ॥ ९। आदित्यःपूजयित्वाचविष्णुद्वारपुराधिपं । आ युर्व्वेदधरान्विप्रान्गृहित्वाचतुरोद्विजान् ।१०। भत्यागममाचक्रेस्थापयित्वा द्विजान्ये ॥ द्वारकांखोपन गरींआवस्यनिकटेतदा।११॥ शांवस्यचमहारोग्यंकृत्वा

रोग्यं द्विजोत्तमाः । श्रीकृष्णपूजिताःसंतोमगधं जमु
द्दुत्सुका । कृष्णेनपुजिताविप्राःसाक्षात्सूर्य्यं समा
द्विजाः । अतोयज्ञादिश्राद्धादौपूजनीयाःद्विजोत्तमाः॥
१२। शाकद्वीपोद्भवाविप्राःसर्व्वरोगनिवृत्तये ॥ वत्स्यं
तिमगधेमान्याःप्रजाभिःसततंद्विजाः । १३ ॥ शाक
द्वीपद्विजाःपुज्याःआयुर्व्वेदपरायणाः । नवलक्षाःभ
विष्यंतिकलिशेषावधिद्विजा । १४॥ नानादेशेगमि
ष्यंतिजीवनोपायहेतुना॥ ब्राह्मणाःसर्व्वदातुष्टावेद
वेदान्तपारगाः। १५ ॥ अग्रहायणमासस्यशुक्लषष्ट्यां
द्विजोत्तमाः ॥ सूर्य्यव्रतंकरिष्यंतिसदामगधवासिनः॥
१६। गंगादक्षिणकक्षेचग्रामोवैकुंठसंज्ञक ।यत्रदेवो
महादेवोनीलकंठोविराजते। १७ । नीलकंठप्रसा
देनतत्रस्थाःप्राणिनोजनाः। भविष्यतिनदारिद्र्यैवैकुं
ठपरवासिनो । १८ । नरहनरामपुरीसमीचीनौ
कलौयुगे ॥ धरामरनिवासंचतयोर्मध्येभविष्यति ॥
१९। तस्मात्अमोतरंरम्यंधर्म्मारण्यमितिश्रुतं। गणेस
तुभिर्भगवानमहेशस्तत्रतिष्ठति ॥ २०। षष्टिवर्षसह
स्राणिकाशीवासेषुयत्फलं तत्फलंनिमिषार्द्धेनकलौ
रद्दूरसंज्ञके। २१। गाधिदेशस्यपूर्व्वेचपश्चिमेजनव्यति

कमे। सिद्धाश्रमेोमहादेयः पंचक्रोशात्मकोमत ॥ २१
॥ चतुरस्त्रोरामबद्दोलोकपातकखण्डिनो ॥ विवाहया
त्रासमयेश्रीरामेणविनिर्मिता। २२। यत्राग्नेयावर्त्तंते
यत्रतथात्राग्नेसरोवरः ॥ स्नानेनदर्शनेनैवलोकाना
पापखण्डनं ॥ २३ ॥ रामनामनयोरेवाप्रसिद्धाव्वर्ष
जातिभिः। सिद्धास्तमेमहापुण्येपुराजाताः द्विजोतमा
॥ २४॥ भोजदेशेपुण्यतमः ग्रामसर्व्वोतमेोतमः ॥ अग
दीसपुराख्यश्चयुगादैासंभविष्यति ॥ २५ ॥ प्रांपग्रावै
ब्याधास्तचनिवतस्यंतिद्धधार्म्मिकाः ॥ यावद्दिष्णु:पृथि
व्यांचयोधोद्दमादूदेशेचयास्यति ॥ २६ ॥ जरासंधन
रुद्धानांनृपानांखघसंयुजां। तारणार्थं मरणानांमा
रणार्थंचभूपतेः ॥ २७ ॥ याचकद्विजरूपेणद्दुगादै
कपटेनच। भीमसेनेनसहितोराजगृहंपुरागमत॥२८
॥ गमनकालेभोजपुरेदिनमेकमुवासह। महिमानमी
मरेमस्यज्ञात्वालाेकैश्चपुजितः ॥ २९ ।तदर्थधिकथ्य
तेलोकैजंगदीशपुरंमहत् ॥ यावत्कृष्णकथालोके
पुण्यांविप्राःवसंतितत ॥ ३० ॥ इति श्रीभविष्यपुराणे
महाखण्डेकोकटदेशांतरवर्त्तिमगदेशवर्णनंचतुर्था
य। मार्कण्डेयमुवाच। इदं वक्ष्यामितनिबोधमे।दिव्या

विक्रीत स्त्रिमधुलिप्सपर्णः षडङ्गवित्वेदवित्स्रोत्रियो योगीस्रेष्ठस्नातकव्रतः॥ श्राकट्टोपेङ्गताविप्रास्तेवैमान्याःकव्रताः पुजनीयाःप्रयत्नेनश्राकचातपूर्व्यद्वापराः २॥ऋत्विकस्वस्त्रीयदौहित्रजामातृश्वसुरस्तथा॥ शिष्याः संबंधिनश्चैवमातृपितृरताश्चये॥३॥ एतान्नियमंचपेच्छ्रा द्धेपूर्व्वे त्तान्प्रथमंनृप॥ ब्राह्मणानपितृपुष्टार्थमनुकल्पेष्वनुतमान् ॥ ४॥ मित्रध्रुककुनखीक्लीवश्यावदंतास्तथा द्विजाः ॥ कन्यादूषयिताबन्हिवेदोभ्रःसोमविक्रयी ॥ ५ ॥ अभिशस्तस्तथास्तेनपिशुनोग्रामयाजकाः ॥ भृतकाध्यायकस्तद्वतभृतकाध्यायकश्चयः ॥ ६ ॥ परपूर्वापतिश्चैवमातृपित्रोस्तथोभ्यकः॥विषलीपतिपोष्टाच वृषलीपतिरेवच ॥ ७ ॥ तथादेवलकश्चैवश्राद्धेनार्हंति केचन ॥ प्रथमेन्हिबुधःसत्तानश्रोत्रियादीन्निमंत्रयेत्॥ ८॥ कथयोच्चतदेवेषांनियोगान्पितृदैवतान्॥ प्राङ्मुखान्भोजयेद्विप्रान्देवानामुभयात्मकान्॥ ९ ॥ पितृमातामहानांचभोजयेच्चाप्युदङ्मुखान् पितृदेवनियोज्यास्तेसूर्य्यरूपाःकव्रताः ॥ १० ॥ इतिश्रीविष्णुपुराणेपितृयज्ञारंभेब्राह्मणानयनेब्राह्मणपरिणाम

सङ्क्रामाभाध्यायः ॥ पुनश्च ॥ श्रीशिवोवाच ॥ शाकद्वीपे
श्वरस्यापिभव्यस्यसुमहात्मनः ॥ सप्तैवतनयास्तेषांददौ
वर्षाणिसप्तमः ॥ १ ॥ जलदश्चकुमारश्चसुकुमारोमणी
चकः ॥ कुसुमोदःसमोदाकिसप्तमश्चमहाद्रुमः ॥ २ ॥
तत्संज्ञान्येवतत्रापिसदावर्षान्यनुक्रमात् ॥ तत्रापिपर्व्व
ताःसप्तवर्षविच्छेदकारकाः ॥ ३ ॥ पूर्व्वतत्रोदयगि
रिर्जलाधारस्तथापरः ॥ तथारैवतकःश्यामस्तथैवा
स्तोगिरिर्द्विज ॥ ४ ॥ अम्बिकेयस्तथारम्यःकेशरोप
र्व्वतोत्तमः ॥ शाकस्तत्रमहान्वृक्षःसिद्धगंधर्व्वसेवितः
॥ ५ ॥ यत्रयत्रवातसंस्पर्शादाह्लादोजायतेपरं ॥ तत्र
पुन्याजनपदाश्चतुर्वर्ण्यसमन्विताः नद्यश्चात्रमहापुन्याः
सर्वपापभयापहा ॥ सुकुमारीकुमारीचनलिनीरेणु
कोपमया ॥ इक्षुश्चधेनुकाश्चैवगभस्तीसप्तमीतथा ॥ अ
वंत्य युतसल्लक्षुन घोमहामुनेमही धरास्तत्रसन्तिसुत
सोमसहस्रशः ॥ ताःपिबन्तिमुदायुक्ताःजलदादिषु
येस्थिताः ॥ ६ ॥ सर्व्वेषुतेजनपदाःस्वर्गादभ्येत्यमे
दिनीं ॥ धर्म्महानिर्नतेष्वस्तिनसंहर्षःपरस्परं ॥ ७ ॥
मर्य्यादाव्युतक्रमोनापितेषुदेशेषुसप्तसु ॥ मगाश्चमाग
धाश्चैवमानसामंदरास्तथा ॥ स्वधर्मनिरतावेदाध्ययन

वारणादित्यर्थः ॥ मगाब्राह्मणभूयिष्ठामागधाश्चविप्रा स्तथा । वैश्यास्तुमानसास्तेषांशूद्रास्तेषांतुमंदगाः ॥ १२ ॥ शाकद्वीपेतुतैर्विष्णुः सूर्य्यरूपधरोमुनेयथोक्तै रिज्यतेसम्यक्कर्म्मभिर्नियतात्मभिः ॥ १३ ॥ शाक द्वीपस्तुमैत्रेयक्षीरोदेनसमंततः ॥ इतिविष्णुपुराणे द्वितीयांशेपंचमाध्यायेशाकद्वीपस्यब्राह्मणोपक्रमः॥ ययंहिपुण्यकर्माणोद्रष्टव्याश्चशुभार्थिभिः ॥ येरत्ता र्कस्यपूजायांयेषांचैवरप्रदीतनयं विद्धिमांविष्णोर्न्नाम्ना शाम्बइतिश्रुतं॥ चंद्रभागातटेचापिमयासूर्य्योनि वेदितः ॥ तेनाहंप्रेषितश्चात्रउतिष्ठध्वंव्रजामहे ॥ ते तमूचुस्ततःशाम्बमेवमेतन्नसंशयः ॥ अस्माकमपिदेवे नख्यातंपूर्व्वमेवहि ॥ अष्टादशकुलानोहमगानां वेदवादिनां ॥ यास्यन्तिचत्वयासार्द्धंयचसंनिहितो रविः ॥ सोनुगृह्यततस्तानिदशचाष्टकुलानिच ॥ आ रोप्यगरुडंशाम्बस्तुरितःपुरमभ्यगात् ॥ सोल्पेनैवतु कालेनप्राप्तामित्रवनेपुनः ॥ कृत्वाञ्जलिंतारवेःशाम्बःकृ तकृत्यंनिवेदयत् ॥ रविप्रीतमनमित्युक्ताप्रसन्नःशाम्बम ब्रवीत् ॥ ममपूजाकराश्चैतेमगानांशान्तिकारकाः ॥ ममपूजांविधानैस्तांकरिष्यन्तिममनोनुगां ॥ ममश्चैव

पुनःखिन्नाननेकाश्चिन्नविष्यति ।इतिशाम्बपुराणेशाक
द्वीपब्राह्मणानयनेपाख्यानेपंचविंशतमोध्यायः॥२५
शाम्बोवाच ॥ अहोसभाग्यास्साघद्यास्वकृतपुण्यास्ततेध
रा॥ पूजायांयेरतार्कस्ययेषांचैववरप्रदः॥ पर्य्याप्तं सर्व्व
मेवैषामिहचामुत्र कंफलं ॥ अनित्येचतिमानुष्येदेव
पूजारताहिये ॥ किंतुचिन्तयतःसूर्य्यं चिन्तयित्वातु
याजकान् ॥ ज्ञानंभवतितथाचैषांहृदयेनाचसंसयः ॥
मोक्षवेदिनयेवैतेकर्म्मयोगसमाश्रिताः॥ यष्टव्योभग
वानसूर्य्यःफलप्रमनोरमैः॥ इतिशाम्बपुराणेशाक
द्वीपब्राह्मणोपाख्याने ॥ **—*—*—**
मोक्षवेदिनइत्यत्र अन्यथारूपंहित्वा स्वरूपेणावस्थिती
तिमुक्ति रितिभागवते द्वितीयेवर्णितामुक्तिमाचतुर्वि
धा॥सालोक्यसामिप्यसारूप्यसायुज्यमुक्तीनांपर्य्यवसा
नस्वरूपेभर्गो ज्योतिर्मयेसच्चिदानन्दानंतविभुव्यापी
परब्रह्मपरमात्मरूपेयतच्छब्दनिर्दिष्टंमोक्षस्वरूपं ॥
सत्यंज्ञानमनन्तंब्रह्मआनन्दादयःप्रधानस्येतिवाक्याव
लम्बनेनसर्व्वेवेदायत्पदमामनंतीत्यनेनवेदवेदान्तपा
रगास्तेजःस्वरूपाःसूर्य्यप्रभामंडलस्थाःइत्यर्थः॥ *—
ब्राह्मणांकौ॥ ब्रह्मसंघातः ॥ ब्राह्मणसमूहवेदभाग

॥ इतिमेदनी । ब्राह्मणः ॥ पुं ॥ ब्रह्मणोविप्रस्यप्रजा यतेर्बाग्पत्यं ॥ ब्रह्मवेदस्तदधीतेबा ॥ घः । इतिभ रतः ॥ ततपर्य्यायः ॥ द्विजातिः ॥ अग्रजन्मा ॥ भूदेवः ॥ वाडवः ॥ विप्रः ॥ इत्यमरः ॥ द्विजः ॥ सुनकंठः ॥ ज्येष्ठबर्णः ॥ अग्रजातकः ॥ द्विजन्मा ॥ वक्रजः ॥ वेद वासः ॥ नयः ॥ गुरुः ॥ इतिशब्दरत्नावली । ब्रह्मा ॥ षटकर्म्मा ॥ द्विजोत्तमः ॥ इतिराजनिर्घंटः । अयं सर्व्वबर्णश्रेष्टः ॥ ब्रह्मणोमुखाज्जातः । पुष्पद्वीपेब्रा ह्मणसंज्ञा॥हंसः॥ शाल्मलीद्वीपे।श्रुतिधरः॥ कुशद्वी पेकुशलः॥ क्रौंचद्वीपे ॥ गुरुः॥ शाकद्वीपे॥ऋतव्रतः॥ पुष्कर द्वीपे ॥ सर्व्वे एकबर्णाः ॥ ब्राह्मणस्यशास्त्रनिरू पितधर्म्मास्त्रयः ॥ अध्ययनं॥ यजनं॥ दानंच ॥ जीवि कास्त्रयः॥ अध्ययनं ॥ याजनं ॥ प्रतिग्रहंच ॥ अय माश्रम चतुष्टवान्भवति ॥ यथा ॥ ब्रह्मचारी ॥ गृह स्थः ॥ वानप्रस्थः॥ सन्यासी । इतिभागवतेप्रमान्यतर मस्ति॥ ब्राह्मणलक्षणं ॥ यथा ॥ जात्याकुलेनबृतेन स्वाध्यायेनश्रुतेनच ॥ एभिर्युक्तोहियस्तिष्टेन्नित्यंस द्विजउच्यते ॥ इतिवन्हिपुराणं ॥ पुनस्तल्लक्षणं ॥ विमु क्तांसर्व्वसगेभ्योमुनिमाकाशवत्स्थितं ॥ अंवमेकवर्

र्थंतंतंदेवाब्राह्मणंविदुः ॥ जीवितंयस्यधर्म्मार्थंधर्म्मा
रत्यर्थमेवच ॥ अहोरात्राश्चपुण्यर्थंतंदेवाब्राह्मणंविदुः
॥ निराशिषमनारंभंनिर्नमस्कारमस्तुतिं ॥ अक्षीणं
क्षीणकर्म्माणंतंदेवाब्राह्मणंविदुः ॥ इतिमहाभारते
मोक्षधर्म्मे ॥ *——*——*——*——*——*
श्रीकल्किरुवाच ॥ वेदामामीश्वरंप्राहुरव्यक्तंव्यक्ति
मत्परं ॥ तेवेदाब्राह्मणमुखेनानाधर्माःप्रकाशिताः
योधर्मोब्राह्मणानांहिसाभक्तिर्ममपुष्कला ॥ तया
हंतोषितःश्रीशःसंभवामियुगेयुगे ॥ ऊर्ध्वंतुत्रिवृतंसूत्रं
सधवानिर्म्मितंशनैः ॥ तंतुत्रयमधोवृतंयज्ञसूत्रंविदु
र्बुधाः ॥ त्रिगुणंतद्ग्रंथियुक्तंवेदप्रवरसंमितं ॥ शिरो
धरान्नाभिमध्यात्पृष्ठार्द्धपरिमाणकं ॥ यजुर्वेदानाम
भिमतंसामगानामयंविधिः ॥ वामस्कंधेनविधृतंयज्ञ
सूत्रंबलप्रदं ॥ मृद्भस्मचन्दनाद्यैस्तुधारयेत्तिलकंद्विजः॥
ब्राह्मणानांकरेस्वर्गावाचोवेदाःकरेहरिः ॥ गात्रेती
र्थानियागाश्चनाडीषुप्रकृतिस्त्रिवृत् ॥ सावित्रीकंठकु
हराहृदयंब्रह्मसंज्ञकं ॥ तेषांस्तनांतरेधर्मःपृष्ठेऽधर्म
प्रकीर्तितः ॥ भूदेवाब्राह्मणाराजन्पूज्यावंद्याःसदु
क्तिभिः ॥ चातुराश्रम्यकुशलाममधर्मप्रवर्तकाः ॥

स्वाम्यापिमानवृद्धास्तपोवृद्धाममप्रियाः ॥ तेषांवचःपा लयिन्नवतारांकृतामया ॥ महात्म्यंब्राह्मणानांच सर्व्वपापप्रणाशनं ॥ कलिदोषहरंश्रुत्वामुच्यतेसर्व्वतो भयात् ॥ इतिकल्किपुराणे ॥ ❀ ❀ ❀

सर्व्वेषामेववर्णानांब्राह्मणःपरमोगुरुः ॥ तस्मैदाना निदेयानिभक्तिश्रद्धासमन्वितैः ॥ सर्व्वदेवाग्रजोविप्रः प्रत्यक्षत्रिदशोभुवि ॥ सतारयतिदातारंदुस्तरेविश्वसा गरे ॥ हरिशर्म्मोवाच ॥ सर्व्ववर्णगुरुर्विप्रस्त्वयाप्रोक्तः सुरोत्तम ॥ तेषामध्येचकःश्रेष्ठःकस्मैदानंप्रदीयते ॥ ब्रह्मोवाच ॥ सर्व्वेपिब्राह्मणाःश्रेष्ठापूजनीयाःसदैव हि ॥ अविद्यावासविद्यावानात्रकार्य्याविचारणा ॥ से यादिदोषयुक्तापिब्राह्मणाब्राह्मणोत्तमाः ॥ आत्मभ्योद्वे पिनस्तेपिपरेभ्योनकदाचन ॥ अनाचाराद्विजाःपूज्या नचशूद्राजितेंद्रियाः ॥ अभक्ष्यभक्षकागावः ॥ कोलास्त मतयेनचः ॥ माहात्म्यंभूमिदेवानांविशेषादुच्यते मया ॥ तवस्नेहाद्विजश्रेष्ठनिशामयसमाहितः ॥ क्षत्रियाणांचवैश्यानांशूद्राणांगुरवोद्विजाः अन्योन्यंगु रवोज्ञेयाःपूजनीयास्वभूसुराः ॥ ब्राह्मणंप्रणमेधस्तुवि ष्णु ॥ बुद्ध्यानरोत्तमःआयुःपुत्रश्चकीर्तिश्चसंपत्तिस्तथा

कुर्वते ॥ नवनीतिद्विजयस्तुमूढधीर्मानवीभुविसद्यो नेनतत्क्षोषं हंतुमिर्छतिकेशवः ॥ ❀ ❀ ❀

पुष्पादिहस्तेना ब्राह्मणस्यप्रणामादिनिषेधोयथा ॥ ❀ ॥

पुष्पहस्तांययोहस्तं देवहस्तंचभुद्धरं। ननमेत्ब्राह्मणंप्राज्ञस्तैलाभ्यङ्गितविग्रहं॥जलस्थं देवलस्थं वाध्यानमज्जितचेतसं। देवपुजांचकुर्व्वंतंननमेवद्ब्राह्मणंबुधः ॥ वह्निक्रियांप्रकुर्व्वंतंभुंजानंचद्विजोत्तमं ॥ तथासामानिगायंतं ननमेब्राह्मणंबुधः ॥ ❀ ❀ ❀ ❀ ❀

ब्राह्मणायत्नतिष्ठंतिवहवोद्विजसत्तम। प्रत्येकंनमस्कारस्तत्रकार्य्योनधीमता ॥ कृताभिवादनंविप्रंभक्तयायोनाभिवादयेत् ॥ सचांडालसमोज्ञेयोनाभिवाद्यःकदाचन ॥ ❀ ❀ ❀ ❀ ❀

कृतप्रणामासर्व्वेपिनमस्कार्य्याद्विजैर्द्विजाः ॥ कृतदोषान्द्विजान्गाश्चनद्विषंतिविचक्षणाः। द्विषंतिवापिमोहेनतेषांरुष्टःसदाहरिः। याचकानब्राह्मणानयस्तुकोपदृष्ट्याप्रपश्यति ॥ सूचिप्रक्षेपणंतस्यनेत्रयोःकुरुतेयमः ॥ विप्रनिर्भत्सनंमूढायेनवक्त्रेणकुर्व्वते। तस्मिनवक्त्रेयमस्तप्तंलौहपिंडंददातिवै ॥ ब्राह्मणायक्रूद्धेभंजनंतक्रूद्धकेशवःस्वयं ॥ देवताःसकलाःएवपित

रक्षुद्दर्षयः ॥

ब्राह्मणपादोदकादिमाहात्म्यं ॥ विप्रपादोदकंयस्तु
कणामात्रं वहेद्बुधः ॥ देहस्थं पातकंतस्यसर्व्वमेवाशुन
श्यति । कोटिब्राह्मणमध्येषुसंतितीर्थानियानिवै ।
तीर्थानितानिसर्व्वाणिवसंतिद्विजपादयोः ॥ विप्रपादो
दकैर्नित्यंसिक्तस्यास्यमस्तकं ॥ सस्नातःसर्व्वतीर्थेषु
सर्व्वयज्ञेषुदीक्षितः । सर्व्वपापानिघोराणिब्रह्महत्या
दिकानिच ॥ सद्यएवविनश्यन्तिविप्रपादांबुधारणात्
। व्याघ्याघ्याधयःसर्व्वे परक्लेशप्रदायकाः ॥ गच्छंति
विलयंसर्व्वे विप्रपादांबुभक्षणात् ॥ शिरसायांनितो
यानिदीयंतेविप्रपादयोः ॥ तैस्तृप्ताःपितरःस्वर्गे ति
ष्ठंत्याचंद्रतारकं ॥

प्रणाम्यविप्रचरणौदूर्व्वाभिर्योऽर्च्चयेद्बुधः ॥ तेनार्च्चि
तोजगत्स्वामिविष्णुःसर्व्वसुरोत्तमः ॥ विप्राणांपाद
निर्माल्यंयोमर्त्यःशिरसावहेत् । सत्यंसत्यमहंवच्मितं
स्यमुक्तिर्हिशाश्वता ॥

ब्राह्मणप्रदक्षिणफलं ॥ विप्रंप्रदक्षिणीकृत्यवंदतेयो
नरोत्तमः ॥ प्रदक्षिणीकृतातेनसप्तद्वीपावसुंधरा ॥ ब्रा

ह्मणस्यपादसेचनफलं ॥ योदघातफलतांवलंविप्रा णांपादसेचने ॥ इहलोकेसुखंतस्यपरलोकेततोधिकं ॥ पुत्रार्थोलभतेपुत्रं धनार्थालभतेधनं ॥ मोक्षार्थोल भतेमोक्षंविप्रपादस्यसेचनात् ॥ रोगीरोगात्प्रमुच्येत पापीमुच्येतपातकात् ॥ मुच्यतेबंधनाद्बद्धोविप्राणांपा दसेचनात्॥अनपत्यास्तुयानार्य्योमृतापत्यास्तुयास्त्रियः ॥ बह्वपत्याजीवत्साःस्युर्विप्रपादाम्बुसेचनात् । ❋ ❋ इतिपद्मपुराणेक्रियायोगसारे ॥ २० ॥ अध्याये ॥ तस्य संध्यायाअकरणेदोषोयथा ॥ नोपतिष्ठतियःपूर्व्वां नोपास्तेयस्तुपश्चिमां ॥ सशूद्रवद्बहिःकार्य्यःसर्व्वस्मा द्द्विजकर्म्मणः ॥ तस्यसंध्यायाःकरणेफलंयथा ॥ याव ज्जीवनपर्य्यंतयस्त्रिसंध्यांकरोतिचसचसूर्य्यसमोवि प्रस्तेजसातपसासदा ॥ तत्पादपद्मरजसासद्यःपूताव सुंधरा । जीवन्मुक्तःसतेजस्वीसंध्यापूतोहियोद्विजः ॥ तीर्थानिचपवित्राणितस्यसंस्पर्शमात्रतः ॥ ततःपापा नियांत्येवमनतेयाद्वियोरगाः ॥ ❋ ⁓ ❋ ⁓ ❋ ⁓ इतिब्रह्मवैवर्तेप्रकृतिखंडे ॥ २१ अध्याये सूर्य्यसमो विप्रस्तेजसातपसासदाइत्यनेनसूर्य्योपासकाः स्वतंत्र ताःशाकद्वीपब्राह्मणाःसूर्य्यरूपाएवनान्येत्यर्थःय

तोऽस्यचप्रसङ्गानुसरणेसूर्य्यांशावसंवादेस्तैतत्रतानामव
सुर्य्यस्वरूपवर्णितंनान्येषामितिभावः॥ * — * *
ननुसर्व्वेब्राह्मणाःगायत्रीमंत्रोपदिष्टंभगवंतंसूर्य्य
मंडलस्थंभर्गंज्योतिःस्वरूपंसच्चिदानंदानंतस्वरूपं
ध्यायंतियजंतीतिसर्व्वशास्त्रेषूक्तेखितमत्रकथंदुराग्र
हेनात्रस्तैतत्रतानामेवसूर्य्यस्वरूपत्वेनवर्णितमितिचेत्त
त्राहश्रीभगवान्सूर्य्यःस्वयमेवशांवपुराणादौस्तैतत्र
तानामेवश्रीसूर्य्यस्वरूपाराधनेतन्तिरूपकगायत्र्या
दिवैदिकमंत्रोपदिष्टोपासनादौस्तैतत्रतानामेववेद
वादिनांस्वरूपानंदनिष्ठानांब्राह्मणानामत्याग्रयेनमा
हात्म्यंवर्णितं॥ यतोऽत्रजम्बूद्वीपेनवखंडांतर्गतभार
तवर्षमध्यंतर्गतदेशप्रदेशगतानांविहायपुनस्सप्तद्वीपांत
र्गतानांचसर्व्वेषांविहाय॥ द्वारावत्यांश्रीकृष्णस्यभग
वतोङ्गजश्रीशांवस्यरोगापनयनार्थंमित्रवनेसूर्य्यस्वरूप
स्यापनसमयेयज्ञारंभेश्रीसूर्य्येणप्रेषितोभगवन्श्रीकृ
ष्णचंद्रेणहिशाकद्वीपेगतोवैतत्रस्थानांस्तैतत्रतानांब्रा
ह्मणानामष्टादशकुलानांवेदवादीनांमोक्षपरानांस्व
वर्णाश्रमधर्मनिष्ठानांप्रार्थनापूर्व्वकंब्राह्मणकुलंस्ववाह
नगरुडोपरिसंस्थाप्यात्यादरेणश्रीसूर्य्याराधनार्थंद्वा

रिकायामंतर्भवनेस्वकीयदेवमंदिरेश्रीसूर्य्यं संस्थाप्य तदाराधनार्थं कृतव्रत कुलब्राह्मणगणंस्थाप्य कृतव्रता नांब्राह्मणत्वं चवर्णितमतोभगवद्रूपसूर्य्योपासनारा धनमंत्रगायत्र्यादिविहितवैदिकादिकर्मचोपासनेतेषां कृतव्रतानां ब्राह्मणानामावश्यकत्व मधिकारंसूचित मितिभावः ॥ मग ब्राह्मणभूयिष्ठाइत्यत्रयथोपदिष्टं पत्रद्वीपेब्राह्मणाःस्वकर्मनिरतामगाः ॥ स्वकर्म ब्रा ह्मणकर्म वेदवेदान्तोपनिषदादिश्रवणमनननिदिध्या सनसाक्षात् परस्वरूपानंदपरब्रह्मावगतस्वानंद दृप्ता ब्राह्मणाइत्यर्थः ॥ ❋ ❁ — ❋ — ❁ — ❁ — ❁

॥ ❁ । पत्रस्थाह॥मगइत्यस्यो । चितव्याख्यानं ॥ ❁ ॥

सःकालोकेप्रतःकालोमहाकालोमहान्तकः ॥ वैकुं ठोवसुधाचंद्रीरविःपुरुषराजकः ॥ वसुधास्थानेवस्तु दाइतिवापाठः ॥ कालभद्रोजयामेधाविस्वदारोभ यप्रदः ॥ जठरंचमश्रमामानंखव्योमाताग्रबंधनो ॥ दीप्तस्थानेदोप्तःइतिवापाठः ॥ विषंशिरोमहावीरः भर्गप्रभाजनेश्वरः ॥ प्रमतःप्रियसुंहृद्ः सर्व्वांगोवन्हि मंडलं ॥ मातंगमालिनोबिंदुःश्रवणाभरणोवियत ॥ रयस्थानेमयइतिवापाठः ॥ ❋ ॥ गःगो॥ गौरीरवोगंगा

नणेशेगोकुलेश्वरः ॥ श्रांगोपंचान्तकोगाथागंधर्व्वः सर्व्वगःस्मृतिः ॥ सर्व्वसिद्धिःप्रभाधुम्राह्वितावाख्यःश्रिवदर्शनःविश्वात्मागैाःपृथग्रूपावालवंधस्त्रिलोचनः ॥ गोतंसरस्वतीविद्या भोगिनीनंदनो धराभोगवतीचहृदयंज्ञानंजालंधरोवलः ॥ वलस्थानेनरोवेतिपाठः ॥ इतिनन्दनभट्टाचार्य्यकृत वर्णमालायां मंरविंवैकुठंभर्गंज्योतिःस्वरूपंपरमात्मानं ॥ ग ज्ञानविषयेहृतकंगेदर्शनंगमनादिकंयेषांतेमगाः ॥ मंरविस्थंज्योतिःस्वरूपंसच्चिदानंदानंतविभुव्यापकंपर[illegible]परमात्मस्वरूपमात्मेष्टतमंगायंतिध्यायंतियेतेमगाःवेदस्वरूपिणःसुर्य्यरूपावेत्यर्थः ॥ ❀—❀—❀—❀❀

अथास्मापरिमान्यवर्य्य श्रीयुक्तपंडित राजवल्लभमिश्रमहामहोपाध्यायब्रह्मात्मैक्य प्रतिपादकतत्वमस्यादिमहावाक्योत्थविज्ञानानुभव स्वरूपानन्दपरायनस्याप्यसंमतिर्ज्ञातव्या ॥ ❀ ॥ पित्रश्राद्धादैासमुपस्थितेशाकद्वीपीयाब्राह्मणानिमंत्रणीया ॥ न ॥ वा ॥ तथादैवेकर्म्मणिपुजनीयास्तेन वेतिप्रश्ने ॥ उत्तरमुच्यते ॥ शाकद्वीपियाब्राह्मणानिमंत्रणीया एवपूजनीयाश्च ॥ भविष्यदादिपुराणादैा ॥ तेषामतिशासस्तत्य बोधनात्तथाच

भविष्यत्पुराणेयाज्ञवल्कंप्रतिब्रह्मवाक्यम ॥ प्रथमंभो
जकाभोज्याःपुत्रस्वविदुषैःसह ॥ तेषामृतेमंचविदस्त
थावेदविदोद्विजाः ॥ भोजकाश्चाकद्वीपीयाब्राह्मणा
एतन्निरुक्तिस्वाग्रेविस्तरतोनिरुपयिष्यते ॥ पुनेतिया
ज्ञवल्कसंबोधनम् ॥ बातसल्यातिशयद्योतनार्थंस्व
विदुषैःस्वपुरोहितैःस्वविदुषैरितिछांदसःप्रयोगः भो
जकशब्दस्यनिरुक्तिरुक्ताभविष्यत्पुराणे ॥ सप्तमीक
ल्पेशतानिकसूमन्तुसम्वादे ॥ साम्बंप्रतिव्यासवाक्येन
शाकद्वीपीयब्राह्मणानुपक्रम्य ॥ सुयंतेऋषयःसर्वे
भोजनेनियमस्थिताः भुञ्जतेवापिमौनेनतेनतेभोजका
स्मृताः ॥ मुनिवर्य्याकृतेःपिशाकद्वीपनिवासिनः ॥
अन्यदपि ॥ धूपमाल्यैस्वगंधैस्वउपहारैस्तथैवचभोजय
न्तिसहस्रांशुंतेनतेभोजकाःस्मृता ॥ इति ॥ दानादा
वपितएवतथाचभविष्यतपुराणे ॥ रत्नानिवस्त्राणि
तथाचगावःसुगंधमाल्यादिहविष्यमन्नम् ॥ तपस्विनां
वाप्ययभोजकायदेयंतथानाप्रियमात्मनोयत् ॥ आ
त्मनोनाप्रियंनामात्यन्तप्रियमित्यर्थः ॥ नजद्वयस्यप्रक
तार्थदाढ्र्यबोधकत्वात् ॥ अवेदवाभोयदिभोजकानां
धिमास्तदार्हन्तिजपोपजीविनः ॥ येमन्त्रविदब्राह्मण

पाठकाश्चयेवापिमामाध्ययनेनियुक्ताःतथाकल्पतरौहे
माद्रिचसृष्य व्रतमुपक्रम्य । सप्तम्याचैत्रमासस्यभोज
येभ्द्रोजकानबुधःसघृतंभोजनंदेयंभोजयित्वाविधा
नतः॥ भोजकायप्रदेयातुदक्षिणास्वर्णमाषकमसघृतं
भोजनंदेयंरक्तवस्त्राणिचैवहि ॥ सलाभेभोजकाना
न्तुदक्षिणीयाद्विजोत्तमाः ॥ तथैवभोजनीयाश्चश्रद्ध
यापरयाविभो ॥ इतिदक्षिणीयादक्षिणार्हाः ॥
तथाशाम्बपुराणेद्विचत्वारिंशत्तमेऽध्याये ॥ नारदंप्रति
शाम्बप्रश्नः मगेवैपूजितेविप्रेयत्फलंप्राप्यतेनरैः॥ भो
जनेयत्फलंचैवतन्मेकथयसुव्रत ॥ मगःशाकद्वीपो
योब्राह्मणः॥ सर्वप्रमाणंभविष्यतपुराणस्यं ॥ सप्त
मीकल्पेप्रतानीवसुमन्तुसम्वादे॥ श्रीवासुदेवंप्रतिव्या
सवाक्यम्॥ ध्यायन्तिचमकारंयेज्ञानंतेषांतदात्मकम्
कारोभगवानरुद्रोभास्करःपरिकीर्त्तितः मकारध्यान
योगाच्च मगाह्यतेप्रकीर्त्तिताः इतितथाशाम्बपुराणे
सप्तमीकल्पेप्रतानीकंप्रतिसुमन्तुवाक्यम् ॥ शाकद्वी
पीयब्राह्मणानुपक्रम्यकथंपूजाकराह्यतेकिंमगाःकिंच
भोजकाः एतत्सर्वंसमाचक्ष्व भोजकानांविचेष्टितम्
व्यस्यवचनंश्रुत्वाकृष्णद्वैपायनोमुनिः ॥ कालीसुता

महातेजाउवाचपरमंवचः ॥ साधुसाधुयदुश्रेष्टसाधु
पृष्टोस्मिसुव्रत ॥ दुर्गं वैचेष्टितंकिंतुभोजकानांनसंश
यः ॥ भास्करस्यप्रसादेनममापिस्मृतिरागता ॥ यथा
ख्यातंवशिष्टेनतथाहिवचनिकृतस्तम्रः ॥ मगानांचरितं
श्रेष्टंशृणुत्वंकृष्णनन्दन ॥ ज्ञानवेदिनएवैतेकर्मयोग
समाश्रिताः ॥ पूर्वकालेनविप्रात्वंवचनंत्वस्मराम्यहम् ॥
विपर्य्यस्तेनवेदेनमगागायंत्यतोमगाः ॥ विपर्य्यस्तेन ॥
व्युत्क्रमेणप्रातिलोम्येनेत्यर्थः । *✿—*—✿
ऋक्सामयजुषामंत्रैर्विपर्यस्तैस्तुनित्यशः गायंत्यर्कंवि
धानेनमगास्तेनततः स्मृताः ॥ पुनरन्यच्चभविष्यत्पुराणे
साम्बंप्रतिनारदवाक्यम् ॥ शाकद्वीपादिहानीतायेमगा
वेदपारगाः ॥ तेषांसंदर्शनात्ध्यानात्पूजनात्सर्वकर्मसु ॥
पापराशिर्व्यपोह्य तेकामप्राप्तिश्चजायते ॥ तेषांशाक
द्वीपीनांब्राह्मणानां सर्वकर्मस्थित्यर्थेनोपवासैकभुक्तान
क्ता वित्तदान रूपं षड्विधंदैवं तथैको द्दिष्टपार्वणश्राद्ध
रूपंद्विविधंपितृकर्मयत्प्रचक्षतेतत्पापराशिर्व्यपोह्य
तकामप्राप्तिश्चजायते ॥ इत्यनेनपापक्षयार्थमनुष्ठाय
ने नित्ये नैमित्तिकेपुत्र पौत्रकलत्रलक्ष्मीकीर्तिस्वर्ग
मोक्षादिकामनया तदभिलाषसिध्यर्थं वानुष्ठायमाने

कास्येचकर्मणि मनानांश्राद्धयानांसंदर्शनात्पूजनात
दानातकर्मानुष्टानेफलंविंध्यति । तथान्यदपिभवि
ष्यत्पुराणस्थंसुमंतुवाक्यं ॥ यस्यभुंक्तेभोजकस्तु ध
गंधपुष्पादनार्चितः ॥ तस्यभानुःस्वयंभुंक्ते पितरोदे
वतास्तथा॥एवच॥मगेषुभोजितेषुस्वयंपितरोभुंजते ॥इ
त्यनेनपितॄणांसाक्षात्तृप्तिर्भवति । इतिवदता॥पितृ
तृप्त्यर्थंक्रियमाणेषुश्राद्धेमगाः॥ नियमेनभोजनीया
स्तेषुभोजितेषुपितॄणांविशेषतस्तृप्तिर्जायते । इत्युक्तं
पितृतृप्त्यर्थंश्राद्धमनुष्टीयते । इतिस्कंधपुराणे
पि ॥ कृष्णस्तुभगवानशाकाद्देदवेदांगपारगान ॥ शा
कद्वीपाच्चमगानविप्रानानायिष्यतिद्वापरे ॥ तदाकुष्टा
ननश्यंतिसत्यंसत्यंवदाम्यहं ॥ इत्यादिवचोभिःशां
बकुष्टापनयनार्थंभगवता श्रीकृष्णेनानीतामगास्त
थारथरथेनपुत्रेच्छयंचानीताइतितथातन्निंदकानां
चकुष्ठादोषउक्तः ॥ इतिस्पष्टं ॥ ननुवाचस्पत्यादि
निबंधेषुकुलाहंकारिणःशांवाद्याधामुष्टिकुलंध्वनाः
कुकर्मसंस्थिताद्यतेकुपथाःपरिकीर्तिताः ॥ एतैःस्
ष्टंचहष्टंचश्राद्धंगच्छतिदानवान ॥ इतिपुराणवच

सा ॥ मगामांश्राद्धे निषेधवक्तोविरुद्धेत । तच हिशा वामगानुष्ठिकामन्त्रा इतिव्याख्यानादिचे मतचवचसि कुकर्मसंस्थितास्त्वे तेइति हेतगर्भविशेषणेनव्याधादि साहचर्य्यं एवमगशब्देनवपकमांसभक्षकामनुष्यहिंस कावभुवाणदेशजाये मगामगदेसस्याः मंगाधागरात किंचितपूर्व्व भागेदुर्गमवनांतरे सागराभ्यंतरदेशविशे षमगा आतिविशेषास्तेएवाच विवक्षिताएवंकुदेशवा शोद्भवाः कुकर्मनिरता मगामगदेशविशेषस्थाःप्रश्नाएवं रूपाजानाः श्राद्धेहेया इतिप्रसिद्धंबंगदेशीयानां । किंतुनहिकुत्रापि मगशब्देनाच शाक्लणस्वरूपे कुकर्मसं स्थित्वंप्रतिपादितं ॥ यतोहिशांबकुष्ठापनयनार्थं । शाकद्वीपादानीता अतएव वायुपुराणे शाकद्वीपस्यच तुर्विधवर्णनिरूपणप्रसंगेभगवतोक्तंचाह । मगाब्रा ह्मणभूयिष्टाः क्षत्रियामागधाः स्मृताः वैश्यास्तुमान साः प्रोक्ताःसूद्रास्तेषांतुमंदगा ॥ इत्यंमगाब्राह्मणभूयि ष्टाब्राह्मणश्रेष्टाः । ✽ ✽ ✽ ✽ ✽

इतिव्याख्यातं ॥ एवंचोतकुष्ठवाचकमांवमगशब्द योर्थ्याधसदृशेष प्रवृतिर्निरूढ विपरीत लक्षणकारक सिपएजनशब्दवदिति सुधियोविभावयंतु ॥ ✽ ✽

इतिश्रीविश्वेश्वर धामकाशीस्थ परमस्मार्त्तवैदिकयाग यज्ञोमतपंडितराजवल्लभ मिश्राचार्य्यवर्य्येणसंगृहीतस्योपरितत्रस्थानांविदुषांसंमतिश्चाचाह॥ ❀—❀

संमतोयमर्थः भट्टोपनामकप्रभाकरशर्मणः ॥ १ ॥ संमतिरत्रार्थे भट्टोपाख्यसखारामशर्मणः ॥ २ ॥ संमतिरत्रार्थे भट्टोपाख्यगंगाधरशर्मणः ॥ ३ ॥ संमतोयमर्थः देवोपाख्यगणपतिशर्मणः ॥ ४ ॥ असंस्तममुमर्थं देवोपाख्यमहादेवशर्मणः ॥ ५ ॥ कविगुरुजारसमर्था ॥ ६ ॥ संमतोयमर्थः नारायणशास्त्रिणां ॥ ७ ॥ समस्तोयमर्थः भट्टोपनामकवैजनाथशर्मणा ॥ ८ ॥ श्रीरामः श्रां रं गों जं वि श्री ईश्वरदत्तशर्म पंडिताः ॥ ९ ॥ संमतोयमर्थः रामकृष्णविदुषः ॥ १० ॥ एतत् पत्रलिखितवचनमाचराध्यमार्थे संमतिस्तुवै दर्शनांदशर्मणः ॥ ११ ॥ संमतोयमर्थः देवदत्तशर्मणः ॥ १२ ॥ अयं संमतोदुर्गादत्तशर्मणः ॥ १३ ॥ ❀—❀

शाखांकभूमितनृपे विक्रमादित्यभूपतेः॥ नगरेविश्वनाथस्यवस्यैधामकाशिता ॥ १ ॥ स्मृतिसारदयमगदूषिवक्तक्रमपत्रिका ॥ काशिस्थविद्वत्संमत्या राजसभनिर्मिता ॥ ❀❀—❀—❀—❀—❀❀

इति श्रीविश्वेश्वरपुरीकाशिधामस्थब्राह्मणमात्रसंम

तेश्राकद्वीपीब्राह्मणोपाख्याने मत्हामहिम श्रीयुत् श्री

मानराजवल्लभमिश्र पंडित विरचिता खलबक्रचपेटि

काश्रमाप्ता ❀ तयाहरिस्तुष्यतुसर्वदैव ❀ । ❀—❀

अथसंक्षेपेणगोत्रप्रवरनिर्णयः ॥ तत्रगोत्रलक्षणंचाह

बौधायनः । विश्वामित्रोजमदग्निर्भरद्वाजोथगौतमः

अत्रिर्वशिष्टः कश्यपइत्येतेसप्तर्षयः । एकएवऋषिर्या

वत्प्रवरेष्वनुवर्तते।तावत्समानगोत्रत्वमन्यत्रभृगुङ्गिर

साङ्गणात् ॥ भृगूङ्गिरोगणेषुजमदग्निगौतमभरद्वाजे

षएकप्रवरसाम्ये गोत्रसाम्ये वाविवाहोनैवकार्य्यः ।

गोत्राणितुसहस्राणिप्रयुक्तान्यर्बुदानिच ॥ ऊनपंचा

शदेवैषाप्रवराऋषिदर्शनात ॥ तत्रसप्तभृगवः॥वत्सा॥

बिदाआर्ष्टिषेणायस्कामित्रेयुवः वैन्याःशुनकाइति॥

अथाङ्गिरसः ॥ तेगौतमाभरद्वाजाःकेवलाङ्गिरसश्चेति

त्रिधा ॥ तत्रगौतमाःदश ॥ आयास्याःशरद्वंताःकौमं

ताःदीर्घतमसः औशनसःकारेणपालयः राहुगणाः

सोमराजकाःवामदेवाः बृहदुकथा इति गौतमानाम

विवाहः ॥ ❀ ॥ अथभरद्वाजः ॥ तेचत्वारः ॥ भर

द्वाजाःगर्गाःऋक्षाःकपयः ॥ इति । भरद्वाजानाम

पिसर्व्वेषामविवाहः ॥ अथकेवलाङ्गिरसः॥
हरितानामाङ्गिरसाम्बरीषयौवनाश्वेति ॥ आद्योमांधातावा ॥ वतसानामाङ्गिरसमांधातृकौत्सेति ॥ कण्वानामाङ्गिरसाजमीढकाण्वेति। रथीतराणामाङ्गिरसवैरूपराथीतरेति ॥ आङ्गिरसवैरूपपार्ष्दश्वेतिवा॥ अष्टादंष्ट्रपार्ष्दश्वैरूपेतिवा। मुद्गलानामाङ्गिरसभार्म्यश्वमौद्गल्येति। आद्यःतार्क्ष्यवा। विष्णुवृद्धानाङ्गिरसपौरुकुत्सत्रासदस्यवेति। एषांस्वगणंविहायसर्व्वैर्विवाहोभवति ॥ हरितकुत्सयोस्तुनभवति ॥

अथात्रयःतेचत्वारः॥ आत्रेयाःवाद्भुतकाःगविष्ठिराः मुद्गलाइतिअत्रीणांसर्व्वेषामविवाहः ॥

अथविश्वामित्रः॥ तेदशकुशिकाःलोहिताःरौक्षकाः कामकायनाअजाःकताः धनंजयाः अघमर्षणाः पूरणाः इन्द्रकौशिकाइतिएषांविश्वामित्राणामविवाहः। अथकाश्यपाः ॥ तेपंचनिध्रुवाः कश्यपाशाण्डिलाः रेभाः अयश्चनिध्रुवानांकाश्यपवत्सारनैध्रुवेति॥ कश्यपानांकाश्यपावत्सारासितेति। रेभाणांकाश्यपावत्सारैभेति ॥ शाण्डिलानांकाश्यपावत्सारशाण्डिल्ये

॥ अन्तस्थानेदेवलावासितोवा ॥ शाण्डिल्यासितदेव लेतिवाकाश्यपासितदेवलेतिवा अंत्ययोर्थत्वयोर्वा ॥ देवलासितेतिद्वौवा लौगाक्षीन्वद्वयामः एषांकश्यपा नामविवाहः ॥ ✲ ॥ अथ वसिष्टा ॥ ✲ ✲✲ तेपंचवसिष्टाः कुण्डिनाउपमन्यवः पराशराजातुकर्ण्या श्चेतिवसिष्टानासर्व्वेषामविवाहः ॥ अथागस्त्यः तेचत्वारःइध्मवाहाः सोमवाहाः साम्भवाहाः यज्ञवा हाश्चेति अगस्त्यानांसर्व्वेषामविवाह ॥ ✲ ✲✲ अथ द्विगोत्राः ॥ शौगशैशिरीणामाङ्गिरसवार्हस्पत्य भारद्वाजकात्यात्कीलेतिपंच ॥ एषामप्यविवाहः॥ ✲॥ अथमातृगोत्रनिर्णयः ॥ मातुलस्यसुतामूढामातृगो त्रान्तथैवच ॥ समानप्रवरांचैवगत्वाचन्द्रायणंचरेत ॥ गोत्रांमातुःसपिण्डांचविवाहेगोवधःस्मृतः इदंमातृ गोत्रवर्जनंमाध्यन्दिनीयानामेव ॥ मातृगोत्रमाध्यन्दि नीयानामेव ॥ मातृगोत्रमाध्यन्दिनीयानितिसत्याषा ढोक्तेरितिकश्चितमहाराष्ट्रकल्पितंवक्तिमूर्खः ॥ अन्य थागुर्ज्जरादेःकातीयस्यकुलेनविप्रैषःअतएवाहप्रवर मंजरीकारः ॥ शेषस्यातिबहुत्वान्नसर्व्वेषांमातृगो त्रवर्ज्ज मितियत्तगुर्जरादीनांमाध्यन्दिनीयानामप्य

चरणात् एकस्मिन् प्रवरे तुल्ये मातृगोत्र प्रवरस्य च ॥ तमु
द्वाहेन कुर्व्वीत सा कन्या भगिनी स्मृता इति मातृकुले प्रव
रचिंतनमुक्तं तदासुरादि विवाहो द्वापरमिति दिक्वि
स्तरस्तु ग्रंथांतरेभ्यो ज्ञेयः सगोत्रादि विवाहे प्रायश्चित्तं
स्मृत्यर्थसारे ॥

इति निर्णयसिंधौ गोत्र प्रवरं विवाहादौ चिंतनीयमिति
अथ प्रतिकूलादौ ज्योतिर्निबंधे गर्गः कृते तु निश्चये पश्चान्मृ
त्युर्भवति कस्यचित् तदा न मंगलं कुर्य्यात् वर्तेत वैश्वमाप
नुयात् ॥ ज्योतिर्मेधातिथिः वधूवरार्थं घटिते सुनि
श्चिते वरस्य गेहेप्यथ कन्यकायाः मृत्युर्यदि स्यान्मनुजस्य
कस्यचित् तदा न कार्य्यं खलु मंगलं बुधैः ॥ मंगलं विवाह
भृगुराह वाग्दानानंतरं यत्र कुलयोः कस्यचिन्मृत्युः तदो
द्वाहो नैव कार्य्यः स्ववंशक्षयदोषतः ॥ वाचाहस्थौनकः व
रवध्वोः पिता माता पितृव्यश्च सहोदरः मिथ्य स्त्री सुतो
भ्राता भगिनी चा विवाहिता एभिरत्र विपन्नेष प्रतिकू
लं बुधैः स्मृतं अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद्भवेत् माण्ड
व्यः वाग्दानानंतरं माता पिता भ्राता विपद्यते विवाहो
नैव कर्तव्य स्ववंशहितमिच्छता संकटे तु मेधातिथिराह
वाग्दानानंतरं यत्र कुलयोः कस्यचिन्मृतिः तदा संवत्

षरात्‌द्ध्वं विवाहः शुभदोभवेत्‌ स्मृतिरत्नावल्यां पितुर्‌ब्दमध्ये चंस्यात्‌तदर्द्धं मातुरेव मासत्रयंतुभार्य्यायास्तदर्द्धं भ्रातृपुत्रयोः अन्येषांतु सपिण्डानामध्ये चंनास्तीति तमतं शांतिकंकृत्वाततो सउंनविधीयते ज्योतिर्निबंधे प्रतिकूलेपिकर्तव्यो विवाहोमासतःपरंशांतिं विधाय गांदत्वावागदानादिचरेत्पुनः शांतिं विना संकटे शांतिंतथाचमेधातिथिः संकटेसमनुप्राप्ते याज्ञवल्क्येन योगिना शांतिरूक्ता गणेशस्य कृत्वा तां शुभमाचरेत्‌ प्रतिकूलेनकर्तव्यो गच्छेत्‌ यावद्वतुत्रयं प्रतिकूलेपिकर्तव्य मित्याकूर्वकुबिपूर्वे प्रतिकूलेसपिण्डस्यमासमेकं विवर्ज्जयेत्‌ ज्योतिः सारे दुर्भिक्ष राष्ट्रभङ्गे चपित्रोर्वाप्राणसंशये प्रौढायामपिकन्यायां नानुकूलं प्रतीक्षते मेधातिथिः पुरुषत्रयपर्य्यंतं प्रतिकूलं स्वगोत्रिणांप्रवेशनिर्गमौतद्वत्‌ तथामुण्डनमण्डने भेतकर्माण्य निर्वर्त्यचरेन्नाभ्युदयक्रियांचाचतुर्थं ततः पुंसिपंचमेशुभदंभवेत्‌ ॥ ✽—✽

✽ इत्यपिनिर्णयसिंधौ विवाहादौ चिंतनीयमिति ✽

सामवेदस्याखिलसहस्रभेदतासीत्‌ । तेषांमध्यामि। आसुरायणीयाः वासुरायणीया ॥ वार्तान्तवेया ॥ प्रांजला ॥ ऋग्वर्णभेदा । प्राचीनयोग्या ज्ञानयोग्या

राणायणीपास्ते त्वष्टभेदशाखा तत्रराणायणीयानांन
वभेदाः सन्ति राणायणीयाः शाठ्य यनीयाः शावाय
नीयाःइतिशाठामुग्याःइतिचपाठः सात्वलाःसात्वमु
द्गवाइतिवापाठः । मौद्गलाःखल्वलाःमहाखल्वला
लांगलाःकौथुमाः गौतमाःजैमिनीया श्चेति । तेषां
मध्ययनंष्टौसामसहस्राणि सामानिच चतुर्दशष्टौ
शतानिदशोतिदशसप्तसुवालखिल्याःससुपर्णभेदाः ॥
एतत्सामगणंस्मृतं ॥ * — * — * — * —
सामवेदस्यकास्य पगोत्रं विष्णुर्दैवत्यं जागतं छन्दः ॥
सामवेदानित्यस्त्रग्वीशुचिः शुचौवाशीशुचिवासाः सो
मीशमीदाण्डीचर्म्मीदण्डीकांचननयनः आदित्यवर्णः
वर्णे नषडरत्निमाचःइतिसामवेदस्यवर्णनं ॥ ***
यजुर्वेदस्यषडशीतिभेदाभवंतितत्रचरकाणांद्वादश
भेदाभवन्ति ॥ चरकाः१ आह्वरकाः१ कठाः२ प्राच्यक
ठाः४कपिष्ठलकठाः५ उपमन्याः६ आष्टलकठाः७चा
रायणीयाः८ वारायणीयाः९ वर्तांतवेयाः १० श्वेता
श्वतराः११ मैत्रायणीयाः १२ इति ॥ तत्रमैत्रायणी
याणांसप्तभेदाःसन्ति ॥ मानवाः१ दुन्दुभाः२ चैके

याः३ वाराहाः४ हारिद्रवेयाः५ छगमाः६ श्यामायणीयाश्चेति ७ ॥ तेषामध्यपनमष्टौ यजुः सहस्राण्यधीत्यशाखापारोभवतितान्येवद्विगुणान्यधीत्यपदपारोभवति ॥ तान्येवत्रिगुणान्यधीत्यक्रमपारोभवति ॥ षडङ्गान्यधीत्यषडङ्गविद्भयति ॥ शिक्षा१ कल्पो२ व्याकरणं३ निरुक्तं४ छन्दो५ ज्योतिषमित्यङ्गानि ॥ तत्र गाच्योदीच्यांनैऋत्यंनैऋत्यः ॥ तत्रवाजसनेयानांदश भेदाभवंति ॥ जाकलाः१ बौधेयाः२ काखाः३माध्यन्दिनाः४ शपेयाः५ तापनीयाः६ कापालाः७ पौंड्रवत्साः८ आवटिकाः९ पामारटिकाः१० परामावटिकापिवापाठः१० पाराशरीयाः ११ वैधेयाः११ वैधेयाः१२ वैनेयाः१३ उधेयाः१४ गालवाः१५ वैजवाः१६ कात्यायनीयाः१७ ॥ इतितत्रतैत्तिरीयाणांद्विभेदा भवंति ॥ उंखा१ खमध्योपिवापाठः खाण्डिकेयाश्चेति २ ॥ तत्रखाण्डिकेयानंपंचभेदाभवंति ॥ आपस्तम्बो१ बोधायनो२ सत्याषाढो३ हिरन्यकेशी ४ औख्येयाश्चेति ५ औधेयोचवापाठः तत्रकठानांतूपगानविशेषाः चतुश्चत्वारिंशत्तुपग्रंथान् ॥ मंत्रब्राह्मणयोर्वेदस्त्रिगुणं यत्रपठ्यते ॥ यजुर्वेदः सविज्ञेयः शेषाः शाखांतराः

स्मृताः ॥ **—*—*—*—*—*
यजुर्व्वेदस्यभारद्वाजगोत्रं ॥ रुद्रदैवतं ॥ त्रैष्टुभंछंदः ॥ यजुर्व्वेदः कृशोदीर्व्वः कपालोताम्रवर्णः कांचन नयनः ॥ आदित्यवर्णोवर्णेनपंचारत्निमात्रः ॥ *—
इतियजुर्व्वेदगणंस्मृतं ॥ * ॥ अथर्व्ववेदस्यनवभेदा भवंति ॥ पैप्पला:१ दांताः२ प्रदांताः३ स्नाताः४ स्नौतावापाठः । स्नाताः५ ब्रह्मदावलाः ६ शौनकी७ देवदर्शती ८ चरणविद्याश्चेति ९ दांता १ प्रदांता २ उता ३ ब्रह्मदीपशी ४ वेदशी ५ ॥ इतिभाष्येनामांतरं
तेषामध्ययनंपंचकल्पानिभवंति ॥ नक्षत्रकल्पो १ विधानकल्पो २ विधिविधानकल्पः३ संहिता ४ शान्तिकल्पश्चेति५ सर्व्वेषां वेदानामुपवेदाः संति ॥ ऋग्वेदस्यआयुर्व्वेदः॥ यजुर्व्वेदस्यधनुर्वेदः ॥ सामवेदस्य गांधर्व्ववेदः॥ उपवेदः ॥ अथर्व्ववेदस्यशस्त्रशास्त्राणि भवंति ॥ अथर्व्ववेदस्यवैजायनगोत्रं ॥ इंद्रदैवत्यं अनुष्टुभंछंदः॥ अथर्व्ववेदस्तीक्ष्णश्चण्डःकृष्णः कामरूपी क्षुद्रकर्मा ह्येवसाध्याः क्षुद्रकर्म्मिष्वेव साध्याइतिवा पाठः ॥ अथध्यानंध्यायामित्वं पद्मपत्रायताक्षं कुंचित केशंब्रह्मदैवत्यमाद्यं ॥ **—*—*—*

॥ एतत्अथर्व्ववेदगणस्मृतं ॥ ॥

ऋग्वेदस्याष्टौस्थानानिभवन्ति ॥ चर्च्चाश्रावकः१ चर्चकः२ श्रवणीयपारः३ क्रमरथः५ क्रमजटः६ क्रमपठः७ क्रमदण्डश्चेतिः८ चतुष्पारायणमेतेषां ॥ शाखाःपंचविधाभवंति ॥ आश्वलायनी १ सांख्यायनी शाकला३ वाष्कला ४ माण्डुकेयाश्चेति ५ तेषामध्ययनं ॥ अध्यायास्तुचतुःषष्टिः ॥ मण्डलानिचदशैवतु ॥ एकर्चएकवर्गस्यादेकश्चनवस्तथा ॥ द्वौवर्गौऋचौज्ञेयौचोणिऋचशतंस्मृतं ॥ चतुऋचंसमाख्यातंषट्सप्त्युत्तरंशतंपंचर्च्चंद्वादशशतान्यष्टाविंशोतराणिच ॥ षट्शतचयंषडर्च्चंचसप्तपंचाशदुत्तरं ॥ सप्तर्च्चमेकोनविंशदुत्तरंशतमेककं ॥ अष्टाःपंचपंचाशद्वर्गाःस्युर्नाधिकोत्तराः ॥ वर्गाणांपरिसंख्यातंद्विसहस्रेषडुत्तरे ॥ सहस्रमेकंसूक्तानांनिर्व्विंशंकंविकल्पानां ॥ दशसप्तस्तुपञ्चान्तेसंख्यातंवैपदक्रमं ॥ एकशतंसहस्रंवाद्वौपंचाशत्सहस्राद्वं ॥ एतानिचचतुर्दशवाशिष्टानां ॥ इतरेषांपचाशीतिक्रमकाखतुवेष्टव्यं ॥ चतुस्त्रिंशत्सहस्राणिद्विखण्डानांसहस्राणांद्वात्रिंशत्षोडशोत्तरा ॥ चत्वारिंशतसहस्राणिद्वात्रिंशतचाक्षरसहस्राणि ॥

ऋचां दशसहस्राणि ऋचां पंचशतानि च ॥ ऋचामशीति पादश्च एतत्पारायणमुच्यते ॥ एकऋचैकवर्गस्य एकस्य नवकस्तथा ॥ द्वौ वर्गौ द्वे ऋचौ ज्ञेयौ चौणि चौणि शत स्तथा ॥ षट्सहस्रमेकं सूक्तानां पंचानां शतमानविंशतिः ॥ अष्टकानां द्वे च अष्टौ अक्षरे शते ॥ चतुऋचे चौणि शतानि अष्टकानां चौण्याषष्टिरष्टकानां ॥ ऋग्वेदस्यात्रेयगोत्रं एकम वर्णं स्यानुष्टुष्टोमप्रमाणं ॥ वन्हेरौद्रं चैष्टुभं ताम्रवर्णं भारद्वाजं एकमनेव कृष्णांगः यजुर्वेदं दीर्घमादित्यवर्णं कापाली नं पंचचारन्तिमाच ॥ ✻✻—✻✻

॥ ✻ इति ऋग्वेदगणं समाप्तं ॥ ✻ ॥

इदं दैवतं रूपं गोत्रप्रमाणं छंदोवर्णं वर्णं यतिसविद्यां लभते स विद्यां लभते ॥ जन्मजन्मवेदपारो भवति अव्रतो व्रतो भवति अप्रयताः प्रयतो भवति अब्रह्मचारो ब्रह्मचारो भवति जातिस्मरते जायति ॥ ✻—✻—✻

✻ यद्इदं चरणव्यूहं श्राद्धकाले सदा पठेत् ॥ ✻

अक्षय्यमभवत् श्राद्धं पितॄणामुपतिष्ठति ॥ योऽधीते चरणव्यूहं स विप्रः पंक्तिपावनः ॥ पावयत्यखिलानपूर्वान् पुरुषान् सप्त सप्त च ॥ लोकातीतं महाशान्तं अमृतत्वं गच्छति ॥ ॐ नमः इत्याह भगवान्व्यासः पाराशरो यो

ख्यासःपाप्पप्परीयः ॥ * ॥ इतिचरणाख्य ऋग्वेदनि
र्णय गोत्रवर्णनं ॥ * ॥ वेदान्तवेद्यचरणेनयदूत्तमेना
ग्नातो ह्यमेवनितरांयदुनाथविप्रःसर्वार्थसार श्रुतिनिर्ण
यपद्यजातव्याख्यांचकार सुभगांसुभगाःपिवन्तु ॥ *
इति श्रीमत् राधावल्लभचरणशरणाश्रयापन्न यदुनाथ
शास्त्रिणा संगृहीता सर्वार्थावभासिकानिर्णयदीपि
कासमाप्ता ॥ * ॥ तयाहरिस्तुष्यतुसर्वदैव ॥ * ॥ *
सम्वत १९२ माघशुक्लपंचम्यांगुरुवासरे श्रीवृंदावन
धाम राधावल्लभचरण शरणाश्रयापन्नवभनव लायरे
श्रीयदुनाथ शास्त्रिणोविजयतुसदा मंगलं ॥ * * *